॥ श्रीशिवस्तुती नारायणपण्डितकृत ॥

श्रीगणेशाय नमः ।

स्फुटं स्फटिकसप्रभं स्फटितहारकश्रीजटं
शशाङ्कदलशेखरं कपिलफुल्लनेत्रत्रयम् ।
तरक्षुवरकृत्तिमद्भुजगभूषणं भूतिमत्-
कदा नु शितिकण्ठ ते वपुरवेक्षते वीक्षणम् ॥ १॥

त्रिलोचन विलोचने लसति ते ललामायिते
स्मरो नियमघस्मरो नियमिनामभूद्भस्मसात् ।
स्वभक्तिलतया वशीकृतवतीसतीयं सती
स्वभक्तवशतो भवानपि वशी प्रसीद प्रभो ॥ २॥

महेश महितोऽसि तत्पुरुष पूरुषाग्र्यो भवान्-
अघोररिपुघोर तेऽनवम वामदेवाञ्जलिः ।
नमः सपदि जात ते त्वमिति पञ्चरूपोचित-
प्रपञ्चचयपञ्चवृन्मम मनस्तमस्ताडय ॥ ३॥

रसाघनरसानलानिलवियद्विवस्वद्विधु-
प्रयष्टृषु निविष्टमित्यज भजामि मूर्त्यष्टकम् ।
प्रशान्तमुत भीषणं भुवनमोहनं चेत्यहो
वपूंषि गुणपूषितेऽहमहमात्मनोऽहंभिदे ॥ ४॥

विमुक्तिपरमाध्वनां तव षडध्वनामास्पदं
पदं निगमवेदिनो जगति वामदेवादयः ।
कथञ्चिदुपशिक्षिता भगवतैव संविद्रते
वयं तु विरलान्तराः कथमुमेश तन्मन्महे ॥ ५॥

कठोरितकुठारया ललितशूलया वाहया
रणड्डमरुणा स्फुरद्धरिणया सखट्वाङ्गया ।
चलाभिरचलाभिरप्यगणिताभिरुन्नृत्यतश्-
चतुर्दश जगन्ति ते जयजयेत्ययुर्विस्मयम् ॥ ६॥

पुरा त्रिपुररन्धनं विविधदैत्यविध्वंसनं
पराक्रमपरम्परा अपि परा न ते विस्मयः ।
अमर्षिबलहर्षितक्षुभितवृत्तनेत्रोज्ज्वलज्-
ज्वलज्ज्वलनहेलया शलभितं हि लोकत्रयम् ॥ ७॥

सहस्रनयनो गुहः सहसहस्ररश्मिर्विधुर्-
बृहस्पतिरुताप्पतिः ससुरसिद्धविद्याधराः ।
भवत्पदपरायणाः श्रियमिमां ययुः प्रार्थितां
भवान् सुरतरुर्भृशं शिव शिवां शिवावल्लभ ॥ ८॥

तव प्रियतमादतिप्रियतमं सदैवान्तरं
पयस्युपहितं भृतं स्वयमिव श्रियो वल्लभम् ।
विबुध्य लघुबुद्धयः स्वपरपक्षलक्ष्यायितं
पठन्ति हि लुठन्ति ते शठहृदः शुचा शुण्ठिताः ॥ ९॥

निवासनिलयाचिता तव शिरस्ततिर्मालिका
कपालमपि ते करे त्वमशिवोस्यनन्तर्धियाम् ।
तथापि भवतः पदं शिवशिवेत्यदो जल्पतां
अकिञ्चन न किञ्चन वृजिनमस्ति भस्मीभवेत् ॥ १०॥

त्वमेव किल कामधुक् सकलकाममापूरयन्
सदा त्रिनयनो भवान्वहति चार्चिनेत्रोद्भवम् ।
विषं विषधरान्दधत्पिबसि तेन चानन्दवान्
विरुद्धचरितोचिता जगदधीश ते भिक्षुता ॥ ११॥

नमः शिवशिवाशिवाशिवशिवार्थं कृन्ताशिवं
नमो हरहराहराहरहरान्तरीं मे दृशम् ।
नमो भवभवाभवप्रभवभूतये मे भवान्
नमो मृड नमो नमो नम उमेश तुभ्यं नमः ॥ १२॥

सतां श्रवणपद्धतिं सरतु सन्नतोक्तेत्यसौ
शिवस्य करुणाङ्कुरात्प्रतिकृतात्सदा सोचिता ।
इति प्रथितमानसो व्यधित नाम नारायणः
शिवस्तुतिमिमां शिवं लिकुचिसूरिसूनुः सुधीः ॥ १३॥

इति श्रीमल्लिकुचिसूरिसूनुनारायणपण्डिताचार्यविरचिता
शिवस्तुतिः सम्पूर्णा ॥

॥ श्रीशिवस्तुती लङ्केश्वरकृत ॥

श्रीगणेशाय नमः ।
गले कलितकालिमः प्रकटितेन्दुभालस्थले विनाटितजटोत्करं रुचिरपाणिपाथोरुहे ।
उदञ्चितकपालकं जघनसीम्नि सन्दर्शितद्विपाजिनमनुक्षणं किमपि धाम वन्दामहे ॥ १॥

वृषोपरि परिस्फुरद्धवलधामधामश्रियां कुबेरगिरिगौरिमप्रभवगर्वनिर्वासि तत् ।
क्वचित्पुनरुमाकुचोपचितकुङ्कुमै रञ्जितं गजाजिनविराजितं वृजिनभङ्गबीजं भजे ॥ २॥

उदित्वरविलोचनत्रयविसृत्वरज्योतिषा कलाकरकलाकरव्यतिकरेण चाहर्निशम् ।
विकासितजटाटवीविहरणोत्सवप्रोल्लसत्तरामरतरङ्गिणीतरलचूडमीडे मृडम् ॥ ३॥

विहाय कमलालयाविलसितानि विद्युन्नटीविडम्बनपटूनि मे विहरणं विधत्तां मनः ।
कपर्दिनि कुमुद्वतीरमणखण्डचूडामणौ कटीतटपटीभवत्करटिचर्मणि ब्रह्मणि ॥ ४॥

भवद्भवनदेहलीविकटतुण्डदण्डाहतित्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते ।
व्रजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं किमित्यमरसम्पदः प्रमथनाथ नाथामहे ॥ ५॥

त्वदर्चनपरायणप्रमथकन्यकालुण्ठितप्रसूनसफलद्रुमं कमपि शैलमाशास्महे ।
अलं तटवितर्दिकाशयितसिद्धिसीमन्तिनीप्रकीर्णसुमनोमनोरमणमेरुणामेरुणा ॥ ६॥

न जातु हर यातु मे विषयदुर्विलासं मनोमनोभवकथास्तु मे न च मनोरथातिथ्यभूः ।
स्फुरत्सुरतरङ्गिणीतटकुटीरकोटौ वसन्नये शिव दिवानिशं तव भवानि पूजापरः ॥ ७॥

विभूषणसुरापगाशुचितरालवालावलीवलद्वहलसीकरप्रकरसेकसंवर्धिता ।
महेश्वरसुरद्रुमस्फुरितसज्जटामञ्जरी नमज्जनफलप्रदा मम नु हन्त भूयादियम् ॥ ८॥

बहिर्विषयसङ्गतिप्रतिनिवर्तिताक्षावलेः समाधिकलितात्मनः पशुपतेरशेषात्मनः ।
शिरःसुरसरित्तटीकुटिलकल्पकल्पद्रुमं निशाकरकलामहं बटुविमृश्यमानां भजे ॥ ९॥

त्वदीयसुरवाहिनीविमलवारिधारावलज्जटागहनगाहिनी मतिरियं मम क्रामतु ।
उपोत्तमसरित्तटीविटपिताटवी प्रोल्लसत्तपस्विपरिषत्तुलाममलमल्लिकाभ प्रभो ॥ १०॥

इति श्रीलङ्केश्वरविरचिता शिवस्तुतिः समाप्ता ॥